सर-संड[1]-मंडियासा-मुहो[2] । सुस्साय[3]-फल-भरोणमिय[4]-वच्छयलावासिय-पहिय[6]-जण[7]-समाउलो । सव्वोवसग्ग-भय[8]-रहिओ । चाउवण्ण-समाउत्तो[9] । णिच्चूसववड्ढियाणंदो[10] । विविह-काणणोव-सोहिय-भूमि-भाओ । विविह-कुसुमामोय-वासियदियंतरालो[11] । अणवइण्ण[12]-कलि-कालो । अइट्ठ-पावो[13] । अपरिचत्त[14]-धम्मो । अणुवलक्खिय-पयावो[15] । अपणट्ठ[16]-सोहो । अणुवजाय-चोर-रायभओ । अपरिमिय[17]-गुण-गण[18]-णिवासो[19] त्ति । जहिं च[20] । काम-वरिसी भयवं पज्जुण्णो[21] । काम-दुहाओ[22] सुरहीओ । सइ[23]-फलाओ वणप्फईओ । अवंझाओ जुवईओ त्ति[24] । जहिं च[25] ।

> दूरुण्णय-गरुय-पओहराओ कोमल-मुणाल-बाहीओ[26] ।
> सइ महुर-वाणियाओ जुवईओ [27]णिण्णयाउ व ॥ ५०

---

८-१-१९ ] इति दिसो ॥ ४९ ॥ गद्यानि[28] । **सुहावगाह** – सुखावगाहनिर्मल-जलाशयः । तरुणतरूद्यानैकऋद्धिरमणीयः । कमलसरःखण्डमण्डिताशामुखः । सुस्वादुफल-भरावनतवृक्षतलावासितपथिकजनसमाकुलः । सर्वोपसर्गरहितः । चातुर्वर्ण्यसमायुक्तः । नित्योत्सववर्धितानन्दः । विविधकाननोपशोभितभूमिभागः । विविधकुसुमामोदवासित-सकलदिगन्तरालः । अनवतीर्णकलिकालः । अदृष्टपापः । अपरित्यक्तधर्मः । अनुप-लक्षितारिप्रतापः । अप्रणष्टशोभः । अनुपजातचौरराजभयः । किं बहुना । अपरिमितगुण-निवास इति । तत्र जलाशयाः सरोवराणि । तरुणतरूद्यानो अभिनववृक्षारामः कमल-सरसंडं, इति कमलप्रधानं सरस्तस्य षण्डं वनम् । चातुर्वर्ण्यं ब्राह्मणक्षत्रियवैश्यशूद्रा इत्यादि सुज्ञेयमिति न विव्रियते ॥ गद्यम् । **जहिं च** – यत्र च कामवर्षी पर्जन्यो मेघः कामं मनीषानुरूपं वर्षति । कामदुघा धेनवः सुरभयः कामम् अभीष्टं दुह्यन्त इति । सदाफला वनस्पतयो वृक्षाः षड्ऋतुफलशालिनः । अवन्ध्या युवतयः । इति पुण्याधिक्य-प्रतिपादनार्थमिदम् ॥ यत्र च । ५० ) **दूरुण्णय** – युवतयः स्त्रियो निम्नगा नद्य इव । स्त्रियः किंभूताः । दूरुन्नय इति दूरमत्यर्थम् उन्नतावुच्चौ पयोधरौ स्तनौ यासां ताः ।

---

[1] = खंडसमूह. [2] P no Daṇḍa. [3] B सुसायफलहरोणय. [4] = अवनमित. [5] = वृक्षतल, P double Daṇḍa after वच्छयल. [6] B omits पहिय. [7] P omits जण, but J पहियजण. [8] B omits भय. [9] B समाजुत्तो, P no Daṇḍa here. [10] In J it looks like वड्ढिया°. [11] B वासियसयलदियंतचक्को. [12] = अनवतीर्ण. [13] P no Daṇḍa. [14] = अपरित्यक्त, B अपरिचित्त. [15] = प्रकृष्टताप, B °लक्खियारिपयावो. [16] B अणट्ठसोहो. [17] JB अपरमिय. [18] B omits गण. [19] PJ निवासो, B निवासु. [20] B puts double Daṇḍa before and after जहिं च. [21] = मेघः, J पज्जुण्णो, P no Daṇḍa. [22] P कामु, P काम; B often reads उ for ओ. [23] J सयं for सइ of P, B सफलाउ वणस्सईउ. [24] B omits त्ति; J has a number ॥ ५० ॥ after त्ति. [25] P omits जहिं च given by JB. [26] = एकत्र बाहू. [27] PJB नि°. [28] The phrase गद्यानि or गद्यम् is written by B usually at the close of the Prākrit passage concerned, here, for instance, after णिवासो त्ति; and then the Sanskrit commentary is given. [29] B °नरिद्धि°.

अच्छउ ता णिय-छेत्तं सेसाइ[1] वि जत्थ पामर-वहूहिं ।
रक्खिज्जंति मणोहर-गेयारव-हरिय-हरिणाहिं[2] ॥ ५१

इय[3] एरिसस्स सुंदरि मज्झम्मि[4] सुजणवयस्स[5] रमणीयं ।
णीसेस-सुह[6]-णिवासं णयरं णामं[7] पइट्ठाणं[8] ॥ ५२

तं च पिए वर-णयरं वण्णिज्जइ जा विहाइ[9] ता रयणी ।
उद्देसो[10] संखेवेणं[11] किं पि वोच्छामि णिसुणेसु ॥ ५३

जत्थ वर-कामिणी-चलण-णेउरारावमणुसरंतेहिं ।
पंडिराविज्जइ[12] मुह-मुक्क-किसलयं[13] रायहंसेहिं ॥ ५४

जण्णग्गि-धूम-सामलिय-णहयलालोयणेक्क-रसिएहिं ।
णच्चिज्जइ ससहर-मणि-सिलायले[14] घर-मयूरेहिं ॥ ५५

ण तरिज्जइ[15] घर-मणि-किरण-जाल-पडिरुद्ध-तिमिर-णियरम्मि ।
अहिसारियाहिं[16] आमुक्क-मंडणाहिं पि संचरिउं ॥ ५६

---

कोमले मृणालवद्बाहे भुजौ यासां ताः । सदा मधुरवाणीकाः । नदीपक्षे पयोभराः कोमल-मृणालान्वहन्तीति वाहा धारिण्यः मधुरपानीयाश्च ॥ ५० ॥ ५१ ) **अच्छउ** – आस्तां तावन्निजक्षेत्रं यत्र मनोहरगेयारवहृतहरिणाभिः पामरवधूभिः । सेसाइ[17] वि शेषाणामपरेषां प्रतिवेश्मिकानाम् अपि क्षेत्राणि रक्ष्यन्ते ॥ ५१ ॥ ५२ ) **इय** – हे सुन्दरि इति ईदृशस्य सुजनपदस्य मध्ये विख्यातं प्रसिद्धं निःशेषगुणनिवासं प्रतिष्ठानं नाम नगरम् ॥ ५२ ॥ ५३ ) **त च पिए** – तच्च प्रिये वरनगरं तैस्तैरपरैर्गुणैर्यावद्वर्ण्यते तावद् विभाति रजनी रात्रिः । तस्मात्संक्षेपेण कमपि उद्देशं कतिपयपदार्थस्वरूपं वक्ष्यामि भणिष्यामि शृणु ॥ ५३ ॥ ५४ ) **जत्थ** – यत्र वरकामिनीचलननूपुरारावमनुसरद्भी राजहंसैः प्रतिराव्यते । कथम् । मुखमुक्तविसलतं यथा भवति । हंसरवानुकारिनूपुरध्वनिमाकर्ण्य मुखात्कमलनालं त्यक्त्वा हंसाः प्रतिशब्दायन्त इति ॥ ५४ ॥ ५५ ) **जण्णग्गि** – यज्ञाग्नि-धूमश्यामलितनभस्तलालोकनैकरसिकैर्गृहमयूरैः । शशधरमणिशिलातले चन्द्रकान्तमणि-कुट्टिमे नृत्यते यत्रेति गम्यते । मेघाशङ्कया क्रीडामयूरैर्नृत्यमासूत्र्यते ॥ ५५ ॥ ५६ ) **ण तरिज्जइ** – यत्र गृहमणिकिरणजालप्रतिरुद्धतिमिरप्रसरे सति । आ समन्तान्मुक्तमण्डनाभि-रप्यभिसारिकाभिरसतीभिः संचरितुं न शक्यते । गृहमणिदीपो मणिमयकुड्यानि वा यत्र स्फटिकमयमन्दिरोदरदीपप्रकटितबहिरुद्द्योते दुष्टाभिसारीकाभिरपि परीभ्रमितुं न तरीज्जइ[18]

---

[1] J सिज्झा for सेसा. [2] B हरिणेहिं. [3] = एतस्यऽदृशस्य [?]. [4] P मजंमि, J मज्झंम्मि, B मझंमि. [5] = सुजनपदम्या [= दस्य] [6] B गुण for सुह. [7] B नामे. [8] P पहिट्ठाणं, JB पइ°. [9] P पहाइ, JB विहाइ. [10] P उद्देशो सं°, J उद्देसो सं°, B उद्देसं सं°. [11] B संखेविण किं पि हु वु°. [12] = पति [= प्रति] रव आचर्यंते. [13] P विसलयं, JB किसलयं. [14] P सिलायडे, JB सिलायले. [15] = न शक्यते. [16] B writes this verse twice; in the second version we have some variants : पसरंमि for णियरम्मि, °सारिया वि for सारियाहिं. [17] B सेसा पि. [18] B न खु यति for न तरिज्जइ.

साणूर-थूहिया-धय-णिरंतरंतरियं-तरणि-कर-णियरे[1] ।
परिसेसियायवत्तं गम्मइ संगीय-विलयाहिं ॥ ५७
सरसावराह-परिकुविय-कामिणी-माण-मोहं-लंपिक्कं ।
कलयंठि-उलं चियं कुणइ जत्थ [12]दोच्चं पियाण सया ॥ ५८
णिद्दय-रय-रहस-किलंत-कामिणी-सेय-जल-लवुप्फुसणा ।
पिज्जंति जत्थ णासंजलीहि[16] उज्जाण-गंधवहा ॥ ५९
घर-सिर[17]-पसुत्त-कामिणि-कवोल-संकंत-ससि-कला-चलयं ।
हंसेहि अहिलसिज्जइ मुणाल-सद्धालुएहि जहिं ॥ ६०
मरहट्ठिया पओहर-हलिद्द-परिपिंजरंबुवाहीए ।
धुव्वंति[20] जत्थ गोला-णईए तं दियसियं पावं ॥ ६१
अह णवर तत्थ दोसो जं गिम्हि-पओस-मल्लियामोओ ।
अणुणय-सुहाइं माणंसिणीण [24]भोत्तुं चिय ण देइ ॥ ६२

---

न शक्यते ॥ ५६ ॥ ५७) **साणूर**—संगीतवनिताभिर्नर्तकीभिर्यत्र परिशेषितातपत्रं मुक्तच्छत्रं गम्यते । कस्मिन् सति । साणूर इति । साणूरं देवगृहं तत्र स्तूपिकासु आमलसारकेषु ध्वजपताकाभिर्निरन्तरम् आच्छादितस्तरणेः सूर्यस्य करनिकरः किरणसमूह इति ॥ ५७ ॥ ५८) **सरस**—यत्र कलकण्ठीकुलं कोकिलासमूहः सदा प्रियाणां दौत्यं दूतत्वं कुरुते । किंभूतम् । सरस इति सरसः सवस्को योऽपराधः तेन परिकुपितानां कामिनीनां मानमपनयति इत्यर्थः ॥ ५८ ॥ ५९) **णिद्दय**—यत्र निर्दयरतिरहःक्लाम्यत्कामिनीस्वेदजललवोत्पुंसका उद्यानगन्धवहा गृहारामवाता नासाञ्जलिभिर्नासिकापुटैः पीयन्ते । निर्दयं निष्करुणं यद्रतिरहःसुरतैः क्लान्तं तेन क्लाम्यन्तीनां ग्लानिमापन्नानां कामिनीनां स्वेदजलकणान्नुल्लुञ्छयन्ति स्फोटयन्ति ॥ ५९ ॥ ६०) **घरसिर**—यत्र मृणालश्रद्धालुभिः बिसास्वादनरसिकैर्हंसैः गृहशिरःप्रसुप्तकामिनीनां कपोलसंक्रान्तशशिकलावलयोऽभिलष्यते । ललनागल्लसंक्रान्तं चन्द्रबिम्बमेव कमलनालाशङ्कया मरालैराकांक्ष्यते ॥ ६० ॥ ६१) **मरहट्ठिया**—यत्र महाराष्ट्रिका वनिताः पयोधरहरिद्रापरिपिञ्जराम्बुवाहिन्यां गोलानद्यां तद्दैवसिकं तद्दिनोत्पन्नं[26] पातकं धुव्वंति स्फेटयन्ति पावनत्वात् स्नानमात्रेण शुध्यन्ति । तस्याश्च प्रतोलीद्वार एव वहमानत्वादिति ॥ ६१ ॥ ६२) **अह णवर**—अथ नवरं केवलं तत्र देशे दोषोऽपगुणः यः ग्रीष्मप्रदोषमल्लिकामोदो मनस्विनीनां मानिनीनाम् अनुनयसुखानि

---

[1] = देवगृहशिषर. [2] P °तरियं, JB °तरिय. [3] B णिकरे. [4] = परिशेषितातपत्रं, P परिसे सियातवत्तं JB as a above. [5] गम्मय सं°, [ गम्मएँ ]. [6] B वणियहि for विल°. [7] P सहसा°, JB सरसा°. [8] B मोस, [9] = चौरं. [10] B कूलं for उलं. [11] P विय, JB चिय. [12] = दुच्चं. [13] B रह. [14] P रहसं, P रहस. [15] B लवफुसणं. [16] P °हि, JB °हिं. [17] B सिरि. [18] B कामिणी. [19] = कपोलसंक्रां [ त ] शशिलतावलयं, P लया for कला of JB. [20] J वुचंति. [21] = तदि [ = द्दि ] नसजं, B तद्दिवसियं. [22] B गिंभ. [23] = विचकिलामोदः, [24] = भोक्तुमेव, P त्रिय, JB चिय. [25] B looks like °नुलुंखयंति. [26] B °त्रपातकं.

अह णवर तत्थ दोसो जं फलिह-सिलायलम्मि तरुणीण ।
मयण-वियारा दीसंति बाहिर-ठिएहिं वि जणेहिं ॥ ६२*१

अह णवर तत्थ दोसो जं वियसियं-कुसुम-रेणु-पडलेण ।
मइलिज्जंति समीरण-वसेण घर-चित्त-भित्तीओ ॥ ६३

५ तत्थेरिसम्मि णयरे णीसेस-गुणावगूहिय-सरीरो ।
भुवण-पवित्थरिय-जसो राया सालाहणो णाम ॥ ६४

जो सो अविग्गहो वि हु सव्वंगावयव-सुंदरो सुहओ ।
दुद्दंसणो वि लोयाण लोयणाणंद-संजणणो ॥ ६५

कुवई वि वल्लहो पणइणीण तह णयवरो वि साहसिओ ।
१० परलोय-भीरुओ[12] वि हु वीरेक्क-रसो तह चेय ॥ ६६

---

प्रसादनसौख्यानि भोक्तुमेवानुभवितुमपि न ददाति । मल्लिकापुष्पपरिमले प्रसर्पितमात्र एव झटिति मानिनीमानो विलीयते सान्त्वनं नापेक्षत इति ॥ ६२ ॥ ६२*१ ) **अह णवर**— अथ नवरं तत्र दोषो यत्स्फटिकशिलातले आकाशस्फटिकमयगृहे तरुणीनां मदनविकाराः कामविक्रियाः नखादिचिह्नानि बहिःस्थितैरपि जनैर्दृश्यन्ते । दर्पणवत्प्रतिबिम्बेनेति भावः १५ ॥ ६२*१ ॥ ६३ ) **अह णवर**— अथ नवरं तत्र दोषो यद्विकसितकुसुमरेणुपटलेन समीरणेन वायुना गृहभित्तिचित्राणि मलिनीक्रियन्ते । गाथात्रयेऽपि निन्दास्तुतिरूपेणो-त्कर्षज्ञापनम् ॥ ६३ ॥ ६४ ) **तत्थेरिसम्मि**— तत्र ईदृशे नगरे निःशेषगुणावगूढ-शरीरः सर्वाङ्गीणगुणमयो भुवनप्रविस्तृतयशा राजा शातवाहनो नाम । विद्यते इति शेषः । 'अतसीसातवाहने लः' [ हैम० ८-१-२११ ] । 'क ग च ज' [ हैम० ८-१-१७७ ] इति २० सालाहणो ॥ ६४ ॥ ६५ ) **जो**— यः सो अविग्रहोऽपि सर्वाङ्गावयवसुन्दरः सुभगः । ननु योऽविग्रहोऽशरीरः स कथं सर्वाङ्गावयवसुन्दरो भवति । अथ च प्रतापमात्रेण वशीकृत-सर्वरिपुत्वाद् अविग्रहो युद्धरहितः । अथवा अः विष्णुः स एव विग्रहः शरीरं यस्य सः । 'ना विष्णुः पृथिवीपतिः' इति वचनात् । सर्वाङ्गानि नयनवदनहस्तपादादीनि तैः सुन्दरः सुलक्षणः । अथवा स्वाम्यमात्यादीनि सप्त राज्याङ्गानि तैः सुन्दरः सुभगः सौभाग्यवांश्च । २५ दुद्दंसणु त्ति दुर्दर्शनोऽपि लोकानां लोचनानन्दसंजननः । यो दुर्दर्शनो दुष्टं दर्शनं लोचनं यस्येति कृत्वा स कथं लोचनानन्दसंजननः इति विरोधः । अथ च दुःखेन दृश्यते इति दुर्दर्शनो द्रष्टुमशक्यः सामान्यलोकानां तेजसानेकपरिवृतत्वाच्च ॥ ६५ ॥ ६६ ) **कुवई**— कुपतिरपि वल्लभः प्रणयिनाम् इति चित्रम् । कुत्सितः पतिः कुपतिरपि विरोधः । अथ च कुः पृथ्वी तस्याः पतिः स्वामी नरेन्द्रः इत्यर्थः । प्रणयिनां स्नेहिनां वल्लभः प्रीतिदायी ।

---

[1] This verse is given only in B. [2] B पलिह. [3] B विहसिय. [4] J वडलेण. [5] B मयलि°. [6] B घरभित्तिचित्ताइं. [7] B तत्थेरिसए. [8] B अविग्रहो. [9] = अविरोधपक्षे पृथ्वीपतिः, कुवइ त्ति विव°. [10] PB पणइयाण, J as above. [11] P नयवरो, J णयधरो, B णयपरो. [12] P भीरउ, J भीरुओ, B भीरुउ.

सूरो वि ण सत्तासो[1] सोमो वि कलंके[2]-वज्जिओ णिच्चं ।
भोई वि ण दोजीहो तुंगो वि समीव-दिण्णं[3]-फलो ॥ ६७
बहुलंत[4]-दिणेसु ससि व्व जेण वोच्छिण्णं[5]-मंडल-णिवेसो ।
ठविओ तणुयत्तण-दुक्ख-लक्खिओ[6] रिउ-जणो[7] सव्वो ॥ ६८
णिय-तेय-पसाहिय-मंडलस्स ससिणो व्व जस्स लोएण ।
अक्कंत-जयस्स[8] जए पट्ठी[9] ण [10]परेहि संचविया[11] ॥ ६९
ओसहि-सिहा-पिसंगाण वोलियाओ[12] गिरि-गुहासु रयणीओ ।
जस्स पयावाणल[13]-कंति-कवलियाणं पिव रिऊणं ॥ ७०

---

तथा यो नतपरो नताः नमस्कृताः परे शत्रवो येनेति स कथं साहसिकः । अथ च नयो न्यायः तत्परः तन्निष्ठः । यद्वा नताः परे वैरिणो यस्येति । अथवा न च परे[14] अन्ये वा यस्येति । यदुक्तम् ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

साहसिकः शूरवृत्तिः । परलोकभीरुकोऽपि[15] वीरैकरसः तथा चैव । परे ये लोकाः तेभ्यो भीरुर्यः स कथं वीरकर्मैकरसिकः । अथ च परलोकान्नरकादेर्भीरुर्भयाकुलः । वीरश्च दानधर्मयुद्धवीरः ॥ ६६ ॥ ६७ ) **सूरो** – सूर्योऽपि न सत्ताश्वः । अथ च शूरः पराक्रमी न सत्रासो निर्भय इति । सोमोऽपि नित्यं कलङ्कवर्जितः । चन्द्रः कलङ्कपङ्किल एव भवति । अयं तु सोमः स्पृहणीयदर्शनः । सह उमया कीर्त्या वर्तते सोम इति वा । भोग्यपि सर्पोऽपि न द्विजिह्वः । अथ च भोगी भोगवान् न द्विजिह्वः खलः । तुङ्गोऽपि समीपदत्तफलः । विरोधराहित्ये तुङ्गो मानोच्चः सेवकानां तात्कालिकफलदायी च ॥ ६७ ॥ ६८) **बहुलंत** – येन व्युच्छिन्नमण्डलनिवेशो गतराष्ट्रः सर्वोऽपि रिपुलोकः तनुत्वदुःखलक्षितो दुर्बलः स्थापितः कृतः । क इव । बहुलान्तदिनेनामावास्यया शशी चन्द्र इव । सोऽपि तदा मण्डलरहितः क्षीणश्च भवति ॥ ६८ ॥ ६९ ) **णियतेय** – यस्य नरेन्द्रस्य शशिनः इव निजतेजःप्रसाधितमण्डलस्य अन्यच्चाक्रान्तजगतो जगति विश्वे परेण शत्रुणा लोकेन च पृष्ठं न सत्यापितं न दृष्टम् । चन्द्रपक्षे पृष्ठं परभागः । 'पृष्ठे वानुत्तरपदे' [हैम० ८-१-१२९] इति पिट्ठी । [नरेन्द्रपक्षे][16] संग्रामे इति गम्यम् ॥ ६९ ॥ ७०) **ओसहि** – गिरिगुहासु भूधरकन्दरासु ओषधिशिखापिशङ्गानां रिपूनां यस्य भूपस्य प्रतापानलकान्तिकवलितानामिव रजन्यो रात्रयः वोलिया व्यतिक्रान्ताः । सर्वापहारं नाशिता हि रिपवो भयाक्रान्ता गत्वा गिरिगुहासु शेरते स्म । तत्र च जाज्वल्यमानौषधीकान्तिपिङ्गल-

---

[1] = सत्रासः, द्वि° सत्ताश्वः. [2] J कलंकि. [3] B दिन्नहलो. [4] = कृष्णपक्षान्तदिने, B बलंतदिणेण. [5] = व्युच्छिन्न. [6] J लक्खिउं, B लक्खिउ. [7] B रिउयणो. [8] = आक्रांतजयस्य, द्वि° आक्रांतप्रयतः. [9] B पिट्ठी. [10] PB परेण, J परेहि. [11] = दृष्टा. [12] = व्युत्क्रांता. [13] P पयावानल, JB पयावाणल. [14] B परो अन्ये. [15] B भीरुः कोपि. [16] B shows some gap. [18] B शिषापि°.

आलिहियइ[1] जो वम्मह-णिभेणं[2] णिय-वास-भवण-भित्तीसु ।
लडह[3]-विलयाहिँ णह-मणि-किरणारुणियग्ग-हत्थेहिं[4] ॥ ७१

हियए च्चेय[5] विरायंति[6] सुइर[7]-परिचिंतिया वि सुकईण[8] ।
जेण विणा दुहियाण[9] व मणोरहा कव्व-विणिवेसा ॥ ७२

इय तस्स महा-पुहईसरस्स[10] इच्छा-पहुत्त-विहवस्स ।
कुसुमसराउह-दूओ व्व आगओ[11] सुयणु महु-मासो ॥ ७३

पत्थाणं पढमागय-मलयाणिल[12]-पिसुणियं वसंतस्स ।
बहुल[13]च्छलंत-कोइल-रवेण साहंति व्व वणाइं ॥ ७४

[14]गहिऊण चूय-मंजरि[15] कीरो परिभमइ पत्तला-हत्थो ।
ओसरसु सिसिर-णरवइ[16] पुहई लद्धा वसंतेण ॥ ७४ * १

---

शरीरास्ते यत्प्रतापवह्निविच्छुरिता इव रेजुरित्यर्थः ॥ ७० ॥ ७१) **आलिहियइ**—यः श्रीशालवाहनः नृपो नखमणिकिरणारुणिताग्रहस्ताभिर्लटभवनिताभिः प्रधाननायिकाभिः मन्मथमिषेण कन्दर्पव्याजेन निजवासभवनभित्तिषु आलिख्यते चित्र्यते। तस्य लोकातिशायि सौन्दर्यमुक्तम्। 'वनिताया विलया' [हैम० ८-२-१२८] इति विलया ॥ ७१ ॥ ७२) **हियए च्चेय**—हे सुतनु हे सावित्रि येन नरेन्द्रेण विना कवीनां प्रबन्धविधायिनां परिचिन्तिता मनसि धृता अपि काव्यविनिवेशा हृदय एव विलीयन्ते इति। क इव। दुःखितानां मनोरथा इव। दरिद्राणां ह्यभिलषितानि चिरं चिन्तितान्यपि मनस्येव मज्जन्ति। तदुक्तम्।

उन्नम्योन्नम्य तत्रैव दरिद्राणां मनोरथाः ।
पतन्ति हृदये व्यर्था विधवास्त्रीस्तना इव ॥

एतावता तस्य मनोरथपथातिगदातृत्वमुक्तम् ॥ ७२ ॥ ७३) **इय तस्स**—इति तस्य महापृथ्वीश्वरस्य इच्छाप्राप्तविभवस्य मनीषितसंपदः। हे सुतनु कुसुमशरायुधदूत इव मधुमासो वसन्त आगतः अवतीर्णः ॥ ७३ ॥ ७४) **पत्थाणं**—वनानि काननानि बहलोच्छलत्कोकिलरवेण प्रथमागतमलयानिलपिशुनितं वसन्तस्य प्रस्थानं साधयन्तीव अत्रावतरणं कथयन्तीव ॥ ७४ ॥ ७४*१) **गहिऊण**—[गृहीत्वा चूतमञ्जरीं कीरः परिभ्रमति पत्तलाहस्तः। अपसर शिशिरनरपते पृथ्वी लब्धा वसन्तेन] ॥ ७४*१ ॥

---

[1] P आलिक्खिज्जइ, B आलिहियइ. [2] = मिषेण, P निहेण, J निभेण, B मिसेण. [3] = रम्य, P लडहं, JB लडह. [4] J गुच्छेहिं for हत्थेहिं (?), B हत्थाहिं. [5] PB च्चिय, J च्चेय. [6] P विलायंति, J विरायंति, B विलयायंति. [7] P सुइर, B सुयणु [8] B हु for सु. [9] = यथा दुःखितानां मनोरथाः तं अप्राप्य विलीयंते, B द्रुहियाण. [10] P मुहई°, J पुहई°, B पुहवीस°. [11] B उवगउ for आगओ. [12] P °यानिल, JB °याणल. [13] B बकुलछ°, [बहलुच्छ°]. [14] This verse is found only in J. [15] [°मंजरिं]. [16] J नरवइ.

मउलंत-मउलिएसुं [1]वियसिय-वियसंते[2]-कुसुम-णिवहेसु ।
सरिसं चिय ठवइ पयं वणेसु लच्छी वसंतस्स ॥ ७५

बहुएहि वि[3] किं परिवड्ढिएहिँ बाणेहिँ कुसुम-चावस्स ।
एक्केणं चिय [5]चूयंकुरेण [6]कज्जं ण पज्जत्तं ॥ ७६

घिप्पई कणयमयं पिव पसाहणं जणिय-तिलय-सोहेणं ।
अब्भहिय-जणिय-सोहं [10]कणियार-वणं वसंतेण ॥ ७७

वियसंत[11]-विविह-वणराइ-कुसुम-सिरि-परिगया महा-तरुणो ।
किं पुण वियंभमाणो[12] जं [13]ण कुणइ मल्लियामोओ ॥ ७८

पढमं चिय कामि-यणस्स कुणइ मउयाइँ पाडलामोओ ।
हिययाइँ सुहं [14]पच्छा विसंति[15] सेसा वि कुसुम-सरा ॥ ७९

---

७५ ) **मउलंत** – वनेषु वसन्तस्य लक्ष्मीः सदृशं तुल्यमेव पदं स्थापयति निवेशयति समकालमेव स्वागमनं व्यनक्तीति । केषु । मुकुलीभवन्मुकुलितेषु । मुकुलीभवन्ति अङ्कुराणि कुड्मलाकारतामापद्यमानानि मुकुलितानि च कोशरूपाणि तेषु । अन्यच्च विकसित[16]विकसत्कुसुमनिवहेषु । विकसितानि पूर्वं विकासमापन्नानि विकसन्ति च तत्कालमुज्जृम्भमाणानि यानि कुसुमानि पुष्पाणि तेषां निवहाः समूहास्तेषु । कोऽर्थः । वसन्ते प्रवर्तमानमात्रेऽपि सर्वपुष्पाणि विकासोन्मुखान्यथ[17] जातानि ॥ ७५ ॥ ७६ ) **बहुएहि** – बहुभिः परिवर्धितैर्बाणैः शरैः अपि कुसुमचापस्य कामस्य किं प्रयोजनं विना अपि पर्याप्तमित्यर्थः । यतः एकेनापि चूताङ्कुरेण सहकारपुष्पोद्गमेन भण कथय किमपर्याप्तम् । कन्दर्पस्य किं किं न साधितमित्यर्थः ॥ ७६ ॥ ७७ ) **घिप्पइ** – जाततिलकशोभेन वसन्तेनाभ्यधिकजनितशोभं कर्णिकारवनं कनकमयं प्रसाधनं मण्डनमिव गृह्यते । तिलको वृक्षविशेषो विशेषको वा । अपरोऽपि शोभाप्रियो ललाटे तिलकमाधाय कनकमयाद्याभरणानि परिधत्ते । इत्युक्तिश्लेषः ॥ ७७ ॥ ७८ ) **वियसंत** – विविध वनराजिकुसुमश्रीपरिगता महातरवो महाप्रमाणा वृक्षाः विकसन्तु तावद्विकासमाप्नुवन्तु । न च असाध्यं तैः किमपि साधनीयम् । किं पुनर्विजृम्भमाणो विकसन् यन्न कुर्यान्मल्लिकामोदः । तन्नास्ति यन्न साधितं मल्लिकापुष्पपरिमलेन । अत एव शेषवृक्षाणां विकासमात्रमेवावशिष्टं मल्लिकयैव पर्याप्तत्वात् ॥ ७८ ॥ ७९ ) **पढमं चिय** – प्रथममेव पाटलामोदः कामिजनस्य हृदयानि मृदूनि कोमलानि कुणइ विधत्ते । पश्चाच्छेषा अपि कुसुमशराः सुखम् अनायासेन विशन्ति प्रविशन्ति । प्रथमं हि कामिमनांसि पाट-

---

[1] = विकसितविकसतं. [2] B विहसंत. [3] J मिं, [ बहुएहिँ वि ]. [4] B विय. [5] PB भूयं°, J चूयं°. [6] P कंजं न पजत्तं, J कंजंण्ण पज्जत्तं, B भण किं न पज्जंतं. [7] = पर्याप्तं. [8] = गृह्यते. [9] B सोएण. [10] = कर्णिका [ र ], J °यारिवणं. [11] B विहसंतु. [12] = विजृंभमाणो. [13] PB जन्न, J जण्ण for जं ण. [14] B पच्छा हिययाइ सुहं. [15] P विज्झंति, JB विसंति. [16] B विकसत्कुसुमानि for विकसित. [17] B °न्यवजातानि.

पज्जत्त-विया[1]सुव्वेल्ल-गुंदि[2]-पब्भार-णूमिय[3]-दलाइं ।
पहियाण दुरालोयाइँ होंति मा[4]यंद-गहणाइं ॥ ८०
अपहुत्त-वियासुड्डीणं[5]-भमर[6]-विच्छाय-दल[7]-उब्भेयं ।
कुंद-लइयाएँ[8] वियलइ[9] हिम-विरहायासियं कुसुमं ॥ ८१
आंवज्झंत[10]-फलुप्पंक[11]-थोय[12]-विहडंत-संधि-बंधेहिं[13] ॥
मंद-पवणाहएहिँ[14] वि परिगलियं सिंदुवारेहिं ॥ ८२
थोऊससंत[15]-पंकय-मुहीए णिव्वण्णिएँ[16] वसंतम्मि[17] ।
वोलीण-तुहिण-भर-सुत्थियाए हसियं व[18] णलिणीएँ[19] ॥ ८३

---

लायं[20]सोन्मादानि क्रियन्ते पश्चाच्छेपकुसुमैर्विध्यन्ते ॥ ७९ ॥ ८० ) **पज्जत्त**—माकन्दगहनानि आम्रवनानि पथिकानां दुरालोकानि भवन्ति । यतः कीदृशानीत्याह । पर्याप्तः[21] प्राप्तो यो विकासोऽत एव उव्विल्लः प्रसरणशीलः यो गुन्दिप्राग्भारो मञ्जरीभरस्तेन नमितानि नम्रीभूतानि दलानि पत्राणि येषां तानि । ' प्रसरेः पयल्लोवेल्लौ ' [ हैम० ८-४-४७ ] इति उव्विल्लः । गुन्दिर्मञ्जरी गुच्छो वा । नम्रीभूतबहलपत्रावलीपरिवेष्टितत्वात् दुरालोकत्वम् ॥ ८० ॥ ८१ ) **अपहुत्त**—अप्राप्तविकासोड्डीनभ्रमरविच्छायदलपुटोद्भेदं हिमविरहायासितं शीतकालवियोगदग्धं कुन्दलतायाः कुसुमं पुष्पं परिगलति भ्रश्यति । पुष्पश्च विगलइ य तदो[22] विकासाभावात् । प्रसद्य निर्गच्छद्भिर्भ्रमरैरेव विहितत्वाद्विच्छा[23]यते ॥ ८१ ॥ ८२ ) **आवज्झंत**—मन्दपवनाहतैरपि अल्पानिलान्दोलितैरपि सिन्दुवारैः निर्गुण्डैः कुसुमैः परिगलितम् । यतः किंभूतैः । आबध्यमानफलोत्पङ्कस्तोकविघटमानसंधिबन्धैः । उत्पङ्कः समूहः । ' पंकोच्छेहसमूहेसु बहलए तह य उप्पंको ।' [ दे० ना० १-१३० ] इति देशीवचनांशः ॥ ८२ ॥ ८३ ) **थोऊससंत**—स्तोकोच्छ्वसत्पङ्कजमुख्या षट्पदकटाक्षनयनया व्यतिक्रान्ततुहिनभरसुस्थितया नलिन्या कमलिन्या हसितमिव । अन्ययापि पद्मिनीप्राप्तया नासिकया अतिक्रान्तजाड्यतया बाल्यदशाया [24]यौवने भेदे जातपङ्कजाकारवदनया कटाक्षवत्या च सस्मितया भूयत इत्युक्तिः युक्तिः । स्मितं च किलिकिञ्चितभावे । यदुक्तं प्रभुश्रीहेमसूरिभिरलंकारचूडामणौ ' स्मितहसितरुदितभयरोषगर्बदुःखश्रमाभिलाषसंकरः किलिकिञ्चितम् ' [ ७-४१ ] इति स्वाभाविकदशस्त्रीविकारेषु । जातयश्च पद्मिनीचित्रिणीशङ्खिनीत्रयम् । [25]लक्षणमासां वात्सायनादवसेयम्

---

[1] P सुवे [ =व्वे ] ल्ल, J सुचिल्ल, सुव्विल्ल. [2] = मंजरी, B गुच्छ for गुंदि. [3] = अनुमित, B णामिय. [4] = आम्रवनानि. [5] P °मुड्डीण, J °सुड्डीण, B °सुडीण. [6] B भ्रमर. [7] = दलपुटोद्भेदं. [8] B कुंदलयाए. [9] J वियलिइ. [10] PJB आवज्झंत. [11] = उप्पंक उत्सेध. [12] B थोंस. [13] J बंधेहि. [14] P पवणाहएहि ग्वि, J °हएहिं वि, B पवाणहसहं वि. [15] = स्तोकोच्छ्वसंत. [16] = अवलोकिते. [17] B मुहीइ त्थप्पयकडक्खणयरीए [ =मुहीइ छप्पय-कडक्ख-णयणाए ]। [18] P च, JB व. [19] J णलणीए. [20] [ पाटलामोदेन मृदूनि ]. [21] B पर्यासिः. [22] B पुष्पस्य विगलइ पतया. [23] [ विहतत्वाद्विच्छाययते ]. [24] [ यौवनभेदे ]. [25] B खल्वयमासां वास्यनंदेवसेयं ।

मलय-समीर-समागम-संतोस-[1]पणच्चिराहिँ सवत्तो ।
[2]वाहिप्पइ णव-किसलय-कराहिँ साहाहिँ महु-लच्छी ॥ ८४

दीसइँ[4] पलास-वण-वीहियासु [5]पप्फुल्ल-कुसुम-णिवहेणं[6] ।
रत्तंबर-णेवच्छो णव-वरइत्तो व्व [7]महु-मासो ॥ ८५

[8]परिवड्ढइ [9]चूय-वणेसु विसइँ[10] [11]णव-माहवी-वियाणेसु[12] ।
लुलइ व [13]कंकेलि-दलावलीसु [14]मुइउ व्व महु-मासो[15] ॥ ८६

अण्णण्ण-वण-लया-गहिय-परिमलेणाणिलेणं[16] छिप्पंती[17] ।
[18]कुसुमंसुएहिँ [19]रुयइ व परम्मुही तरुण-[20]चूय-लया ॥ ८७

वियसिय-णीसेस-वणंतर[21]ाल-परिसंठिएण कामेण ।
विवसिज्जइ[22] कुसुम-[23]सरेहिँ लद्ध-[24]पसरेहिँ कामि-यणो ॥ ८८

---

॥ ८३ ॥ ८४ ) **मलय** – मलयसमीरो दक्षिणानिलस्तस्य समागमे संतोषेण नृत्यन्तीभिर्नृत्यमिवादधानाभिर्नवकिसलयकराभिर्नवपत्रहस्ताभिः शाखाभिर्मधुलक्ष्मीः वसन्तश्रीः वाहिप्पइ आकार्यते इव । 'व्याहृगेर्वाहिप्पः' [ हैम० ८-४-२५३ ] इति वाहिप्प-आदेशः । अथ चापरयापि प्रियागमादिकृष्टया मधुलक्ष्मीः प्रियसखी आहूयते [25]तदत्युक्तिरहस्यम् ॥ ८४ ॥ ८५ ) **दीसइ** – पालाशवनवीथिकासु किंशुकवृक्षावलीषु प्रोत्फुल्लकुसुमनिवहेन कृत्वा मधुमासो वसन्तो रक्ताम्बरनेपथ्यः कौसुम्भवस्त्रपरिधानो नवचरयिता पाणिग्रहणप्रस्तावे वर इव दृश्यते । किंशुककुसुमावलीषु रक्तवस्त्रोत्प्रेक्षेति ॥ ८५ ॥ ८६ ) **परिवड्ढइ** – मुदित इव मधुमासश्चूतवनेषु परिवर्धते वृद्धिमिवाप्नोति । नवमाधवीवितानेषु अतिमुक्तकवल्लीनिकुञ्जेषु विकसति । [26]तद्विकास्यनुवातेन वसन्तः किल कृष्यते । [27]* किंकिल्लिदलावलीषु अशोकपत्रश्रेणिषु लुठतीव । पत्रमयसुखशय्यायां स्वपितीवेति ॥ ८६ ॥ ८७ ) **अण्णण्ण** – अन्यान्यवनलतानां गृहीतः परिमलो येन [28] तेनानिलेन वायुना स्पृश्यमाना तरुणचूतलता पराङ्मुखी सती कुसुमाश्रुभिः पुष्पबाष्पैः रोदितीव । अथवा विमर्दोत्थः परिमलः इति । अपरापि तरुणी अन्यान्यवनिता परिमलानुषङ्गिणा प्रियेणालिङ्ग्यमाना पराङ्मुखीभूय स्थूलाश्रुपातै रुदितमिव व्यनक्ति । पवनप्रेंखोलनयान्यदिक्षु विक्षिप्ता सहकारलता [29]एवमुत्प्रेक्ष्यते ॥ ८७ ॥ ८८ ) **वियसिय** – विकसितनिःशेषवनान्तरालपरिसंस्थितेन कामेन लब्धप्रसरैः प्रस्ता-

---

[1] = प्रनर्तितानि, B पणच्चरीहि. [2] = आहूयते. [3] = कर्तृभिः. [4] B दीसउ. [5] PB पफुल्ल. [6] J णित्रहेसु. [7] J महमासो. [8] J परियट्टइ. [9] P भूय°, J चूय°, B omits चूयवणेसु विसइ. [10] = विशतीव, P विसइ व नव°, J विसइ णव°. [11] B व णवमालईव्वियो [ = या ] णेसु. [12] = वितानेषु. [13] P कंकेल्लि, J कंकेलि, B किंकिल्लि. [14] = मुदित इव, P मुईउ, JB मुइउ. [15] B मासे. [16] P °मलेणानिलेन, JB °मलेणाणिलेण. [17] B छुपंती. [18] = पुष्पाश्रुभिः [19] J रुयइ व्व परमुही. [20] P भूय°, JB चूय°. [21] = विवर. [22] = विवशः क्रियते, P विवसिज्जइ, J वियसियइ, B वियसिज्जइ. [23] PB °सरेहिं, J सरेहिं. [24] P पसरेहिं, B °प्पसरेहि. [25] B आहूय तदुत्फक्तिरहस्यं. [26] B तदिकास्यनुवानेन. [27] B किंकिलि. [28] B योनितिस्वनिलेन. [29] B इवमुत्प्रेक्षते.

ई[1]य वम्मह-[2]बाण-वसीकयम्मि सयलम्मि जीव-लोयम्मि ।
महु-सिरि-समागमत्थाण-मंडवं उवगओ[3] राया ॥ ८९

सेवागय-[4]सय-सामंत-मउड-माणिक्क-[5]किरण-विच्छुरिए ।
सीहासणम्मि[6] बंदिण-जय-सद्द-समं [7]समासीणो ॥ ९०

५ [8]परियरिओ वार-विलासिणीहि[9] सुर-[10]सुंदरीहिँ व [11]सुरेसो ।
[12]कणयायलो व्व आसा-वहूहिँ [13]सइ-[14]वियसियासाहिँ ॥ ९१

अह सो एक्काए समं णर-णाहो चंदलेहणामाए ।
सप्परिहासं [15]सुमणोहरं च सुहयं समुल्लवइ ॥ ९२

अइ [16]चंदलेहे [17]ण णियसि[18] [19]मलयाणिल-कुसुम-रेणु-[20]पंडहत्थं ।
१० कामेण [21]भुयण-वासं व विरइयं [22]दस-दिसा-यक्कं ॥ ९३

---

वक्रप्रातैः कुसुमशरैः कामबाणैः कामिजनो विवश्यते वशीक्रियते ॥ ८८ ॥ ८९ ) **इय वम्मह** – इति मन्मथचापवशीकृते सकलेऽपि जीवलोके राजा श्रीशातवाहनो मधुश्री-समागमस्थानं मण्डपम् उद्यानविजयमन्दिरमुपागतः समाजगाम ॥ ८९ ॥ ९० ) **सेवा-गय** – सेवागतशतसामन्तमुकुटमाणिक्यकिरणविच्छुरिते सिंहासने वन्दिजनजयशब्दाः तैः
१५ समं मागधकृतजयजयारावेण सह समासीनः उपविष्टः ॥ ९० ॥ ९१ ) **परिय-रिओ** – आसननिषीदनानन्तरं सदाविकसितमुखीभिः वारविलासिनीभिः परिकरितः । क इव । सुरसुन्दरीभिः देवाङ्गनाभिः सुरेश इव इन्द्र इव । आशावधूभिः दिक्कामि-नीभिः कनकाचलः सुमेरुरिव परिवेष्टितः ॥ ९१ ॥ ९२ ) **अह सो** – अथानन्तरं स नरेन्द्रश्चन्द्रलेखानाम्न्या एकया वाराङ्गनया समं सार्धं सपरिहासं सनर्मवचनं सुमनोहरं
२० रमणीयं न तु कटुकं सुखदं रोचमानम् । अथ च सुभगं यथा भवति तथा समुल्लपति भाषत इत्यर्थः ॥ ९२ ॥ ९३ ) **अइ** – अयीति कोमलालापे । हे चन्द्रलेखे न पश्यसि । 'दृशो णियच्छपिच्छ०' [ हैम० ८-४-१८१ ] इति सूत्रेण णियः । मलय-समीरसमागमवश[23]प्रसृतकुसुमरेणुपरिपूर्णं दशदिक्चक्रं कामेन वासभुवनमिव रचितं

---

[1] J ईय. [2] B चाव for बाण. [3] = उद्यानं. [4] = शत. [5] P किररण, B किरिण. [6] B सिंहासणंमि. [7] P समल्लीणो, JB समासीणो. [8] P परिवारिउ वार°, J परियरिओ वार°, B परियरिउ वर.° [9] P °सिणीहिं, JB °सिणीहि. [10] P सुंदरीहिं, B सुंदरीहि. [11] = इंद्र. [12] P कणयावलो, J कणयायलो, B कणयायलु. [13] P सय, J सइं, B सइ. [14] P वियसियमुहीहिं, J वियसियासाहिं, B विहसियमुहीहिं. [15] P सुमणोरमं च, J समणोहरं च, B समणोहर वा सु.° [16] P चंदलेहि, B चंदलेहे. [17] = न पश्यसि. [18] According to B, अइ चंदलेहे ण णियसि । is just a prose sentence, and the first line of the verse proper is read thus: मलय-समीर-समागम-वस-पसरिय-कुसुम-रेणु-पडिहत्थं ।. [19] P मलयानिल, J मलयाणिल. [20] = पूर्णं. [21] P वासभवणं व, J भुयणवासं व, B वासभुवणं व. [22] PB दसदसायक्कं, J दसदिसायक्कं. [23] B त्रसित for प्रसृत.

ता कीस तुमं केणावि[1] मयण-सर-बंधुणा मयंक-मुहि[2] ।
चिंचिल्लिया[3] सि सव्वायरेण सव्वंगियं अज्ज ॥ ९४

णव-चंपय-कुसुम-णिवेसियाणणो[4] केण[5] तुह णिडाल-यले ।
सज्जीवो विव लिहिओ[6] महु-पाण-परव्वसो महुओ[7] ॥ ९५

केण वि[8] महग्घ-मयणाहि-पंक-जोएण तुह कवोलेसु ।
लिहियाओ पत्तलेहाओ[10] मयण-सर-वत्तणीओ[11] व ॥ ९६

केण व कइया[12] सहयार-मंजरी तुह कवोल-परंते ।
कर-फंस-विहाविय-कुसुम-संचया सुयणु णिम्मविया[13] ॥ ९७

केणज्ज तुज्झ तवणिज्ज-पुंज-पीए पओहरुच्छंगे ।
पत्तत्तं पत्तं[14] पत्त-लच्छि पत्तं लिहंतेण[15] ॥ ९८

---

कृतम् । अस्तीति शेषः । पडिहत्थं देश्यं परिपूर्णम् । वासगृहमपि सुगन्धाढ्यपटवास-परिकलितं भवति ॥ ९३ ॥ ९४ ) **ता कीस** – तत्किमिति त्वं मृगाङ्कमुखि चन्द्रवदने केनापि मदनशरबन्धुना कामबाणवयस्येन सर्वादरेण सर्वाङ्गिकं सर्वाङ्गीणम् अद्य चिंचिल्लिया मण्डिता असि । ‘मंडेश्चिंचचिंचअचिंचिल्लरीडटिविडिक्काः’ [ हैम० ८-४-११५ ] इति [16]चिंचिल्लिया ॥ ९४ ॥ मण्डनमेवाह । ९५ ) **णवचंपय** – [ नव-चम्पककुसुमनिवेशितानने हे सुतनु ] केन तव भालतले ललाटपट्टे सजीव इव मधुपान-परवशो मकरन्दास्वादेनालसो मधुपो भ्रमरो लिखितः चित्रितः इति ॥ ९५ ॥ ९६ ) **केण** – केन च महार्घमृगनाभिपङ्कयोगेन तव कपोलयोः गल्लयोः पत्रलेखाः लिखिताः चित्रवल्ल्यः कृताः । उत्प्रेक्ष्यते । मदनशरवर्तनयः इव कन्दर्पबाणमार्गा इव । अतः प्रवेशावसरः इति । मृगनाभिः कस्तूरिका ॥ ९६ ॥ ९७ ) **केण** – हे सुतनु चन्द्रलेखे केन वा तव कपोलपर्यन्ते संस्थापिता निश्चलीकृता करस्पर्शविभावितकुसुम-संचया सहकारमञ्जरी रचिता विहिता । करन्यास एव चित्रकसमविस्तारपुष्परूपापन्नो ज्ञेयः । ‘स्पृशः फासफंसफरिसछिवछिहालुंखालिहाः’ [ हैम० ८-४-१८२ ] इति फंसः ॥ ९७ ॥ ९८ ) **केणज्ज** – हे [18]प्राप्तलक्ष्मि तपनीयपुञ्जपीते तव पयोधरोत्संगे पत्रं पत्रवल्लरीं लिखता केनाद्य दिने पात्रत्वं स्वस्य [19]रतवेद्यत्वं प्राप्तम् ।

---

[1] B केण वि. [2] P मयंकमुही, B मियंकमुहिं. [3] = मंडितासि, P विंचिल्लिया, J चिंचिल्लिया, B चंचिल्लिया. [4] B निवेसियाणणे. [5] B केण सुयणु भालयले. [6] B finishes this line with लिहिओ. [7] P भमरो, J महुओ. [8] B व. [9] = मृगनाभिः, J मयणाहिं. [10] B पत्तलेखाम. [11] = मार्गा इव. [12] = कदा, B रइया. [13] B संठविया. [14] = रात्री पर्याप्ती. [15] B लिहिंतेण. [16] चिंचिल्लि. [17] B विसार. [18] B प्राप्तलक्ष्मी. [19] B रत्तविद्यत्वं.

[1]एक्केक्कम-वयण[2]-मुणाल-दाण-[3]वलियद्ध-कंधरा-बंधं ।
चलण-कमलेसु लिहियं केणेयं[4] हंस-मिहुण[5]-जुयं ।। ९९

इ[6]य केण णियय-विण्णाण-पयडणुप्पण्ण-हियय-भावेण ।
अविहाविय-गुण-दोसेण पाइया सप्पिणी छीरं ।। १००[7]

तं तह सोऊण णराहिवाहि[8] वियसंत-लोयण[9]-मुहीए ।
दर-लज्जोणय[10]-[11]वयणाए पभणियं चंदलेहाए ।। १०१

सो देव विद्ध[12]-कुसलो चित्तयरो जेण तुम्ह दार[13]म्मि ।
अ[14]वलंबिऊण पत्तं तइया लिहिओ तुमं चेव ।। १०२

सो चेय[15] पुणो संपइ [16]सिंघल-दीवाहि[17] आगओ एत्थ ।
तेणेयं मयण-महूसवम्मि सव्वं समालिहियं ।। १०३

अह एवं स[18]प्परिहास-गोट्ठि-सुह-संठियस्स[19] णरवइणो[20] ।
लद्धावसरं एक्केण मंति-उत्तेण[21] उल्लवियं ।। १०४

---

तपनीयं सुवर्णम् ।। ९८ ।। ९९) **एक्केक्कम**—एकैकं [22]चरणकमलयोः वदनमृणालदानवलितार्धकन्धराबन्धं मिथुनं हंसयुगम् इदं केन लिखितम् । चित्ररूपेण न्यस्तकन्धरा ग्रीवार्धवलिता वक्रीकृतेति विचित्रम् ।। ९९ ।। १००) **इय केण**—अयि केन निजकविज्ञानप्रकटनोत्पन्नहृदयभावेन अविभावितगुणदोषेण अज्ञातगुणागुणेन सर्पिणी क्षीरं दुग्धं पायिता । आत्मविज्ञानोत्कर्षज्ञापनाय केनेदमनुचितमाचरितमित्यर्थः ।। १०० ।। १०१) **तं तह**—तत्तथा नराधिपात् श्रुत्वा विकसल्लोचनमुख्या सुहृष्टनयनमदनया दरलज्जावनतवदनया चन्द्रलेखया प्रतिभणितं [23]निःशङ्कममुक्तादरम् । ईषल्लज्जा [24]स्त्रीस्वभावत्वम् । न च रोषस्तादृशीनां नर्मपात्रत्वात् ।। १०१ ।। १०२) **सो देव**—हे देव राजन् स विद्धत्कुशलः चित्रकर्मनिपुणः चित्रकरः येन युष्माकं द्वारे प्रतोलीमुखे पत्रमवलम्ब्य तदानीं त्वमेव लिखितः ।। १०२ ।। १०३) **सो चेय**—स एव पुनः संप्रति इदानीं सिंहलद्वीपादत्रागतोऽस्ति । मदनमहोत्सवे कामपर्वणि तेनेदं सर्वं समालिखितं सम्यक् चित्रितम् ।। १०३ ।। १०४) **अह एवं**—अथानन्तरम् एवं [25]पूर्वोक्तप्रश्नो-

---

[1] B interchanges the places of verse Nos. 98 and 99. The order of PJ has been followed, and the Sanskrit commentary is arranged accordingly. [2] P **एक्केक्कवयण**, J **एक्केक्कमवयण**, B **इक्किक्कमवयण.** [3] P **वलियकंधरा.** JB **वलियद्धकंधरा.** [4] P **केणायं**, JB **केणेयं.** [5] B **मिहुणहंसयु** [ = **जु** ] **यं** for **हंस°**. [6] B **अजि** [ = **यि.**] [7] P 99, J 101, B 102. [8] P puts No. 5 on **°हि**, perhaps indicating that it is Abl., B **नरविहाउ.** [9] B **लोवणमुहीण.** [10] = **अवनत.** [11] B **वयणइं.** [12] P **चित्तकु°**, J **विद्धकु°**, B **विद्धत्कु.°** [13] B **दारंमि.** [14] B very corrupt. [15] B **सो चेव.** [16] B **सिंहल°**. [17] J **°दीवाह.** [18] B **सपरि°**. [19] B **संतिसेय°**. [20] J **°वयणो.** [21] PB **मंतिपुत्तेण**, J **मंतिउत्तेण.** [22] Between **एकैकं** and **चरण** etc. B has a word of three letters which look like **वृधंक.** [23] B **निसंकमुक्ता°**. [24] B **स्वभाववत्व.** [25] B **पूर्वेणक्तप्रिस्तोत्तर°**.

सो देव चार-पुरिसो सिंघल-वइणा णिरूविओ मण्णे ।
इमिणा विण्णाण-गुणेण चंदलेहा-घरे वसइ ॥ १०५
एव-विहा एव-विहं अच्छंति णरेसराण जे कडए ।
ते चर-पुरिसा लोए हिं जक्ख-णामा भणिज्जंति ॥ १०६
ता भणियं णरवइणा तस्सोवरि सुयणु सिंहलेसस्स ।
पेहिओ[13] विजयाणंदो पोट्टिस-वर-मंतिणा सहिओ ॥ १०६*१ ५
तस्स कडयाउ अज्ज वि णागच्छइ कोइ कहइउं सच्चं ।
किं भणइ सिंहलेसो किं वा सेणाहिवो अम्हं ॥ १०६*२
अज्जं चिय सिट्ठं हेरिएहिं उयही-तडम्मि संपत्तो ।
विजयाणंदो सह पोट्टिसेण परिवड्डिय-पयावो ॥ १०७ १०
तह सो वि सिंघलेसो[21] तद्दियस-णिरालसो सयं चेय ।
जवसेंधण-संपुण्णाइ कुणइ दुग्गाइ अविसण्णो ॥ १०८

---

त्तरभङ्गया परिहासगोष्ठीसुखं [25]चर्चरीकेलिप्रियं यथा भवति संस्थितस्य नरपतेर्लब्धावसरम् एकेन मन्त्रिपुत्रेण उल्लपितं [26]निवेदितं कथाविक्षेपेण ॥ १०४ ॥ **१०५) सो देव –** हे [28]देव मन्ये शङ्के स सिंहलपतिना निरूपितश्चारपुरुषो हेरिकः । तर्हि चन्द्रलेखा किमस्म- १५ द्वैरिणं स्वगृहेऽवस्थापयतीत्याह । अमुना विज्ञानगुणेन चन्द्रलेखागृहे वसति । वैज्ञानिक इति कृत्वा सुखेन तिष्ठति ॥ १०५ ॥ **१०६) एवविहा –** [29]एवंविधविज्ञानादिदम्भेन एवंविधे चतुरा नरेश्वरस्य कटके ये अच्छंति तिष्ठन्ति ते चरपुरुषा यक्षनामानि लप्स्यन्ते । यक्षवत् परचेष्टितमुपविष्टा जानन्तीति यक्षनामानः[30] ॥ १०६ ॥ **१०६*१) ता भणियं –** तावता हे सुतनु सावित्रि भणितं नरपतिना । मन्त्रिपुत्रं [31]प्रतीति शेषः । २० तस्य सिंहलेशस्य उपरि पुट्टिसवरमन्त्रिणा सहितो विजयानन्दः सांधिविग्रहिकः प्रहितोऽस्ति ॥ १०६*१ ॥ **१०६*२) तस्स –** तस्य कटकादद्यापि नागच्छति कश्चित्कोऽपि कथयति यत्सत्यमवितथम् । किं भणति सिंहलेशः शिलामेघनामा, किं वास्माकं सेनाधिपो विजयानन्दो भणतीति ॥ १०६*२ ॥ अथ मन्त्रिपुत्र आह । **१०७) अज्जं चिय –** अद्यैव [32]शिष्टं कथितं हेरिकैर्गूढपुरुषैः । कथमित्याह । पुट्टिसेन मन्त्रिणा सह २५ विजयानन्द उदधितटे संप्राप्तः ॥ १०७ ॥ **१०८) तह सो –** तथा स चं सिंह-

---

[1] B सिंहल. [2] P निरुविओ, J णिरूविओ, B णिज्जविरु. [3] PJB मन्ने. [4] P would separate चदंलेहा घरे. [5] P एम्वविहा, JB एवविहा. [6] B एवविहे. [7] P नरेसराण, B नार (=नरे) सरिस्स. [8] P लोए हिं, J omits हिं, B लोयंमि. [9] This and the next verse are found only in B. [10] B नर°. [11] B तसोवेरि. [12] B सुजणु. [13] B पेहिउ, the commentary presupposes पहिओ. [14] B वुट्टिस. [15] B अज्जुविहेनाग°. [16] B कहइउं सच्चं, [ कहइ जं सच्चं ]. [17] B अन्हा. [18] B हरिएहिं. [19] J उहईत°, B उवहीत°. [20] = परिवर्धितप्रतापः. [21] B सिंहलेसो. [22] B तद्दियह. [23] P जवसिंधण, J जवसेंधण, B असणिंधण. [24] P संमुण्णाइं कुणइं दुग्गाइं, JB do not nasalise इ. [25] B सविसन्नो. [26] B चस्तरिके°. [27] B निवातितं. [28] B उदवं मन्ये. [29] B एवं विविज्ञानादि°. [30] B यक्षमानानो. [31] B प्रतीत्य शेषः. [32] B सृष्टं.

विसमीकरेइ उयही-तडाइँ[1] जोएइ जुज्झ-भूमीओ ।
विजयाणंदेण समं महाहवं महइ[2] णिक्कंपो ॥ १०९

भणियं च राइणा पिय-वयंस सो च्चेय तत्थ[3] पत्तट्ठो ।
विजयाणंदो णिय-संधि-विग्गहे किं इमेणम्हँ[4] ॥ ११०

५ जेणण्णे वि महामंडलाहिवा णिब्भया वि भेसविया ।
सो किं विजयाणंदो वंचिज्जइ[5] सिंहलेसेण[6] ॥ १११

अणवेलं साहिज्जसु एयं [7]तुह हेरिएण जं सिट्ठं ।
एसा रमणीया [8]मयण-चच्चरी ताव[9] वोलेउ ॥ ११२

एवं भणिऊण णराहिवेण सव्वाण वार[10]-विलयाण ।
१० दिण्णाइँ [11]महूसवियाइँ [12]वंदिणाणं च बहुयाइं ॥ ११३

तह संमाणिय[13]-णीसेस-पणइ-संतोस-वस-पसण्ण-मुहो ।
विण्णत्तो सुयणु पुरोहिएण उवसप्पिऊण पहू ॥ ११४

---

लेशस्तद्दिवसनिरालसः तद्दिनं यदा विजयानन्दः समुद्रतटं प्राप्तः तदारभ्यालस्यविवर्जितः स्वयमेव स्वोपक्रमेणाविषण्णो विषादरहितः सन्नशनेन्धनसंपूर्णानि दुर्गाणि करोति । अशनं १५ धान्यादि इन्धनं काष्ठानि ॥ १०८ ॥ १०९ ) **विसमी** – विषमीकरोति उदधितटान् समुद्रसैकतानि जलप्लावादिना विसंस्थुलानि करोति । सैन्यस्य दुःसंबाधाः जोएइ गवेषयति युद्धभूमीः । निःकम्पो निश्चलचित्तो विजयानन्देन समं महाहवं महायुद्धं महइ कांक्षति । 'कांक्षेराहाहिलंघाहिलंखवच्चवंफमहसिहविलुंपाः' [ हैम० ८–४–१९२ ] इति महः ॥ १०९ ॥ वसन्तोत्सवमनुस्मृत्याह । ११० ) **भणियं च** – भणितं च राज्ञा २० प्रियवयस्य निजसंधिविग्रहे स एव विजयानन्दः प्राप्तार्थः प्रतिष्ठां प्राप्तो निपुण इत्यर्थः । किमनेनास्माकं पर्याप्तमधुना राज्यचिन्तयेत्यर्थः ॥ ११० ॥ १११ ) **जेणण्णे वि** – येनान्येऽपि महामण्डलाधिपा निर्भया अपि बिभीषिता भयं प्रापिताः । ञिभी भये । भियः षान्ताविति [14]सन्नन्तप्रयोगः । स किं विजयानन्दः सिंहलेशेन [15]शिलामेघेन वञ्च्यते मतिविपर्यासं प्राप्यते ॥ १११ ॥ ११२ ) **अणवेलं** – [16]अणवेलं वेलान्तरम् अन्यवेलायां २५ तदन्यवारं साधय कथय एतत् यत्तु हेरिकैस्तव [17]शिष्टं प्रोक्तम् । कारणमाह । एष रमणीयो नगरचर्चरीमहोत्सवारम्भः तावदतिक्रामतु ॥ ११२ ॥ ११३ ) **एवं भणिऊण** – एवं भणित्वा नराधिपेन सर्वासां वारवनितानां बन्दिजनानां च महोत्सवोचितानि बहुकानि प्रसाददानानि दत्तानि ॥ ११३ ॥ ११४ ) **तह संमाणिय** – तथा [18]संमा-

---

[1] P उयहीतडाइं, J उहईतडाइ, B उलहीतडाइ. [2] = वांछति. [3] B इच्छ ( = त्थ ). [4] B इमेणं म्हां ( = इमेणम्हं ). [5] B वंचिज्जै. [6] PB सिंहलेसेग, J सिंघले°. [7] B जं हेरिएहिं तुव सिट्ठ for तुह etc. [8] B वयर [ = नयर ] for मयण. [9] P ताम्व, JB ताव. [10] P वारवल°, JB वारविल°. [11] = मधूत्सविकानि, B महोसवियाइ. [12] PJB वंदि°. [13] P सम्माणीय, B समाणिय. [14] B इनन्त°. [15] B शिलामेघवंच्यातं तमितिविएजासंप्राप्यत ॥ [16] B अणुवेलंतरंतरं आणवलय ॥ तइन्यवारं. [17] B सृष्टं. [18] B सन्मानित°.

देव [1]सुमज्झण-समओ सज्जं चिय मज्जणं विसूरेइ[2] ।
दिय-वर-सत्थो[3] दारे तुह णिच्च[4]-णिवेसिएक्क-मणो ॥ ११५
अह सो विसज्जियासेस-पणइ-पडिवण्ण-मज्जणारंभो ।
संचलिओ वंदिण-सय-समूह[5]-कय-जय-जयासद्दो ॥ ११६
ताव य संचलिय-महा-णरेंद[6]-वर-वार-रमणि[7]-संवलिओ ।
भड-भंड[8]-भोय-मीसो जाओ अत्थाण-संखोहो ॥ ११७
सहसुट्ठिय-णर-संमद्द-णोल्लण[9]-उम्मत्थियाणणो[10] पडिओ ।
पोक्करइ[11] थेर[12]-भट्टो अहो विणट्ठो विणट्ठो हं ॥ ११८
तो[13] सो सेवा-चाएणं[14] विणडिओ कह[15] वि केहिं वि वराओ ।
उक्खित्तो[16] पंक-गओ[17] व्व जर[18]-गओ राय-पुरिसेहिं ॥ ११९
एत्थंतरम्मि ।
अण्णोण्ण[19]-मउड-संघट्ट-खुंडिय[20]-माणिक्क-पयर-पक्खलिओ ।
सुइरेण सरइ[21] एक्केक्कमग्गणं[22]-त्थंभिओ लोओ ॥ १२०

---

नितनिःशेषप्रणयिसंतोषवशप्रसन्नमुखः प्रभुः सुतनु सावित्रि पुरोहितेनोपसर्प्यागत्य विज्ञप्तः ॥ ११४ ॥ ११५ ) **देव** – देव मध्याह्नसमहः । वर्तत इति शेषः । **सज्जं** चिय प्रगुणीभूतमेव मज्जनं स्नानं विसूरइ खिद्यते विनश्यतीत्यर्थः । 'खिदेर्जूरविसूरौ' [ हैम० ८-४-१३२ ] इति विसूरः । नित्यनिवेशितैकमनाः नित्यस्थायी द्विजवरनिर्वहो ब्राह्मणसंघस्तव द्वारे वर्तते ॥ ११५ ॥ ११६ ) **अह सो** – अथ स विसर्जिताशेष[23]-प्रणयिप्रतिपन्नमज्जनारम्भो वन्दिजनशतसमूहकृतजयजयरवः संचलितः स्नानमण्डपं प्रति ॥ ॥ ११६ ॥ ११७ ) '**ताव य** – तावता संचलितमहानरेन्द्रवरवाररमणीसंवलितः भटभण्डभोगमिश्रः आस्थानसंक्षोभो जातः । संवलितः संयुक्तः । भटः सुभटः भण्डाश्चतुरशीतिर्नर्मपात्राणि भोगा वयस्यास्तैर्मिश्रः कर्बुरितः ॥ ११७ ॥ ११८ ) **सहसुट्ठिय** – सहसोत्थितनरसंमर्दप्रेरणोन्मूर्च्छिताननः पतितः सन् पूत्करोति स्थविरभटः अहो विनष्टो विनष्टोऽहम् । अहो इति परामन्त्रणे ॥ ११९ ॥ ११९ ) **तो सो** – ततः स [24]सेवावातेन विनटितः कथमपि वराकः कैश्चिद्राजपुरुषैः पङ्कगतो जरद्गव इव वृद्धवृषभ इव उत्क्षिप्तः ऊर्ध्वीकृतः ॥ ११९ ॥ अत्रान्तरे । १२० ) **अण्णोण्ण** – अन्योन्यमुकुटसंघट्टभ्रष्टमाणिक्यप्रकरप्रस्खलितो लोकः । एकैकमार्गपरिसंस्थितः पृथक् पृथक् मार्गाभि-

---

[1] P सुमज्जण, J मज्झण्ण, B मिझन्न. [2] = खिद्यते. [3] B निवहो for सत्थो. [4] = नित्यदान. [5] P समूढ, JB समूह. [6] B नरेंद्र. [7] B रमणी. [8] B भट्टभंड for भंडभोय. [9] = प्रेरण. [10] B °मुत्थि ( = च्छि ) याणण्णो. [11] = पूत्करोति. [12] B ठेर. [13] B ता. [14] = सेवावातेन, B वएण. [15] = कथंकथमपि, P कहकहवि, J कह वि, B कहि वि. [16] = उत्पाटितः P हक्खुत्तो, J उक्खित्तो. [17] PJB गउ व्व. [18] = जरद्गाव. [19] P अन्नन्न, J अण्णोण्ण, B अन्नून. [20] = पतित. [21] = निःसरति. [22] P मंगणत्थ°, J मंगुणत्थ°, B मग्गपरिसंठिओ लोओ. [23] B °तामं याशे°. [24] B सेवापतेन.

केहि वि[1] वर-वार-विलासिणीहिँ वेसा[2] वि संठिया पुरओ ।
पेल्लिज्जंति सुवल्लह-जण-जोग्गेहिँ पिहु[3]-थणेहिँ ॥ १२१

कीए वि महा-संमद्द-सेय-तण्णाँय[4]-णीवि-बंधाए ।
दुव्वोज्झो उज्झिय-मेहलो[5] वि जाओ णियंब-भरो[6] ॥ १२२

णिविच्चा[7]लिंगण-लालसाएँ हियइच्छिए समावडिए ।
बहु मण्णिज्जइ कीए वि [8]तुडिओ थूलामलो हारो ॥ १२३

कीए वि [9]मय-मयामोय-मिलिय-मुंहलालि[10]-मउलियच्छीए ।
लद्धावसरो वि चिरेण कह वि वोलिज्जइ पएसो ॥ १२४

इय सण्णा-वाहिप्पंत[11]-परियणो कह वि राय-भवणाहि[12] ।
पवणासासिय-हियओ णियया[य]वासं गओ लोओ ॥ १२५

राया वि [13]पवज्जंतेहिँ विविह-मंगल-णिहोस-मुहलेहिं ।
तूरेहिँ पढंतेहिँ य [14]वंदिण-दिय-वर-समूहेहिं ॥ १२६

---

मुखः सुचिरेण सरति गच्छति ॥ १२० ॥ १२१) केहि — कैश्चिरपि वरवारविलासिनीभिः सुवल्लभजनयोग्यैः परिस्तनैः पुरतः संस्थिताः द्वेष्या अपि अनभिगमनीया अपि पीड्यन्ते । अतिसंमर्दादिति शेषः ॥ १२१ ॥ १२२) कीए वि — कस्या अपि महासंमर्दस्वेदार्द्रनीविबन्धाया उज्झितमेखलो भ्रष्टकाञ्चीगुणोऽपि नितम्बभारो दुर्वहो जातः । तत्स्नातमार्द्रीभूतमिति तण्हाँय ॥ १२२ ॥ १२३) णिविच्चा — निविडालिङ्गनलालसया कयाचित् हृदयेप्सिते मनीषिते समापतिते संघटिते स्थूलामलो हारस्त्रुटितोऽपि बहु मन्यते । खुंडिउ त्ति 'त्रुटेस्तुट्टखुट्टखुडोक्खुडोल्लुक्कणिलुक्कलुक्कोल्लूराः' [ हैम० ८-४-११६ ] ॥ १२३ ॥ १२४) कीए वि — कयाचिन्मृगमदामोदमिलितमुखरालिमुकुलिताक्ष्या लब्धावसरो प्राप्तगमनप्रस्तावोऽपि प्रदेशं कथमपि चिरेण वोलिज्जइ लंघ्यते ॥ १२४ ॥ १२५) इय सण्णा — इति संज्ञाव्याहियमाणपरिजनः कथमपि राजभवनात् पवनाश्वासितहृदयः निजकावासं गतो लोकः । संज्ञाः करपल्लवीमूलदेवीप्रभृतयः । तत्र

अहिकलसचक्कटंकणतलोयपउमाजवंकुरेहिँ जा[15] ।
ससहरकरसंवलिया एसा करपल्लवी भासा ॥
अआदौ[16] कादयः प्रोक्ताः खदौ चापि जडौ स्मृतौ ।
शेषवर्गविपर्यासो मूलदेवेन भाषितम् ॥

इत्यादि ॥ १२५ ॥ १२६-२७) राया वि — राजापि प्रवाद्यमानैः विविधमङ्गल-

---

[1] J केहि भ्वि, [ काहिं वि ], [2] = द्वेष्या अपि. [3] PJB पिवि for पिहु. [4] = आर्द्र B तण्हाय. [5] P दुव्वोज्जो उजिय, JB °ज्झो उज्झि°. [6] B हरो. [7] P निभिच्चा°, J णिव्विच्चा., B पिढिभिच्चा° [8] = त्रुटित, B खुडिओ. [9] = मृगमद. [10] J मउलालि. [11] = व्याहियमाण [12] P भवणेहि, JB भवणाहि. [13] = प्रवा [द्य] मानैः [14] J वंदियदिय°. [15] B चा. [16] B आयांदो.

सव्वाहिं चिय स[1]व्वोसहीहिँ लीलाइ मज्जिऊण चिरं ।
सयल-समाणिय-देवाइ-तप्प[2]णो भवणमल्लीणो ॥ १२७
तत्थ वि गो-भूमि-सुवण्ण-वत्थ-तिल[3]-मीसियाइँ दाऊण ।
दाणाइँ दिय-वराणं भोयण-सालं समल्लीणो ॥ १२८
तद्दे[4]स-यालिएहिं पणईहिँ समं पसण्ण-मण-भावो ।
भोत्तुं[5] विविहाहारं सु[6]रसं का[7]लाणुरूयं च[8] ॥ १२९
भोत्तुं तक्कालोइय-परियण-प[9]रियालिओ स[10]मल्लीणो ।
अंतो[11]-अत्थाण-हरं [12]विरइय-वर-रयण-पल्लंकं[13] ॥ १३०
तत्थासीणो [14]सहिएहिँ सुकइ-छंदाणुवत्तिएहिं च ।[15]
[16]स[17]मुयं सुह-संतुट्ठो णर-णाहो [18]एक्कसरियाए[19] ॥ १३१
वा[20]मं-करोवग्गिय-वेत्त-दंड-दाहिण-करोत्थय-मुहेण ।
पहु-हियय-भाव-कुसलेण दारवालेण विण्णत्तो ॥ १३२

---

निर्घोषमुखरैस्तूर्यैः बन्दिद्विजवरसमूहैश्च पठद्भिः भोगवेलावेदपाठं कुर्वाणैः ॥ [ **सव्वाहिं-** ] । सर्वाभिरपि सर्वौषधीभिः लीलया चिरं मज्जित्वा स्नानं विधाय [21]सकलसंमानितदेवादितर्पणो भवनं सौधं अल्लीणो आलीनः प्रविष्टः । 'आलीङोल्ली' [ हैम० ८-४-५४ ] इति अल्ली । युग्मम् ॥ १२६-१२७ ॥ १२८ ) **तत्थ वि**–तत्र द्विजवराणां ब्राह्मणोत्तमानां गो[22]भूमिवस्त्रुतिलसुवर्णमिश्रितानि दानानि दत्त्वा भोजनशालां भोजनमण्डपं समालीनः ॥ १२८ ॥ तत्रापि सौधे । १२९ ) **तद्देस**–तद्देशकालिकैः प्रणयिभिः सह भोजनयोग्यैरनुचरैः समं सार्धं प्रसन्नमनोभावः प्रीणितचित्तः सुरसं स्निग्धं कालानुरूपमृतुसंबद्धं विविधाहारं भुक्तः[23] ॥ १२९ ॥ १३० ) **भोत्तुं**–भुक्त्वा इत्तो इतः स्थानाद्भोजनमण्डपात् तत्कालोचितपरिजनपरिवारितो राजा विरचितवररत्नपल्यङ्कम् आस्थानगृहं समालीनः ॥ १३० ॥ १३१ ) **तत्थासीणो**–[ तत्रासीनः सुहृद्भिः सुकविच्छन्दानुवर्तिभिश्च । ] **समुयं**–समकं समकालं सुखसंतुष्टो नरनाथो राजा यावदेकवेलायाम् । जात इति शेषः । हे सुतनु सावित्रि तावत् सविषादहर्षप्रतीहारः प्रविष्टः ॥ १३१ ॥ १३२ ) **वाम**–वामकरोपगृहीतवेत्रदण्डदक्षिणकरस्थगितमुखेन प्रभुहृदय-

---

[1] = सर्वौषधिभिः. [2] = देवादितर्पण. [3] B मीसिज्जाइ. [4] = तद्देशकालज्ञैः, J तद्देयस°. [5] = भोक्तुं, B भुत्तो. [6] B सरसं. [7] P °णुरूवं च, J °णुरूयं च, B °णुऊलं वा [?]. [8] P युग्मं ( at the close of the verse, but preceding the number ). [9] P परिवारिओ, JB परियालिओ. [10] P समुल्लीणो, J समल्लीणो, B समंली.° [11] B इत्तो for अंतो. [12] P विरईय, JB विरइय. [13] J [ अत्थाणहरम्मि रइय° ] °पल्लंके. [14] = सुहृद्भिः, [ सुहिएहि ]. [15] B omits this line. [16] = समुदं, B समय ; according to B this becomes the first line. [17] P सुह, JB सुह. [18] B जाव इक्क-परियाए for एक्कसरियाए. [19] B has an additional line, the second line of the verse, like this : ताव पइट्ठो सविसाय-हरिसिओ सुयणु परिहारो ॥ १३५ ॥. [20] B वामयरो°. [21] B शकलं. [22] [ °भूमिवस्त्रतिल° ]. [23] B भुक्ताः.

देव दिसा-विजयाओ सेणाहिवई केण[1] वि कज्जेण ।
जर-कप्पड-णेवच्छो[2] विजयाणंदो दुवारम्मि ॥ १३३
तो तं सहस त्ति णिसामिऊण सविसाय-[3]विम्हिय-मणेण ।
भणियं अमच्च-मुह-पेसियच्छिणा पुहइ-णाहेण ॥ १३४
हंहो भट्ट-कुमारिल णिसुयं [4]जं वेत्तिएण[5] संलत्तं[6] ।
ता किं विजयाणंदो एयावत्थंतरं पत्तो ॥ १३५
णीसेस-णीइ-सत्थत्थ-वत्थु-वित्थार-वित्थयँ[8]-मई वि ।
असहाओ ववगय-वाहणो [9]य कहमागओ [9]एत्थ ॥ १३६
णं[10] य भिच्चा णेह करी ण य तुरया णेय पोट्टिसो मंती ।
विजयाणंदस्स कहं कह जाया एरिसावत्था ॥ १३६*१
भणियं भट्ट-कुमारिलेण[11] देव[12] विसमा जयम्मि [13]कज्ज-गई ।
मण्णे तहावि एसो केण वि कज्जेण संपत्तो ॥ १३७
किं जहा[14] ।
परिवड्ढिय-पहु-संभावणाण एवंविहे महाकज्जे ।
[15]असमत्त-पेसणाणं[16] मरणं चियँ[17] सहेइ पुरिसाण ॥ १३८

---

भावकुशलेन द्वारपालेन विज्ञप्तः । वामहस्तेन दण्डं धृत्वा दक्षिणहस्तेन मुखमावृत्य च वेत्रिणा राजा विज्ञापयांचक्रे ॥ १३२ ॥ १३३) **देव** — देव दिग्विजयात्तु सेनापतिर्विजयानन्दः केनापि कार्येण जरत्कर्पटनेपथ्यो[19] जीर्णवस्त्रपरिधानो द्वारे वर्तते ॥ १३३ ॥ १३४) **तो तं** — ततस्तत् सहस त्ति णिसामिऊण प्रतर्कितमेव इति निशम्य श्रुत्वा सविषादविस्मितमनसा अमात्यमुखप्रेषिताक्षेण पृथिवीनाथेन भणितम् ॥ १३४ ॥ १३५) **हंहो भट्ट** — हंहो इति सहसा साश्चर्यभाषणे । भट्टकुमारिल श्रुतं तद्वेत्रिणा यच्छिष्टं[20] कथितम् । तत्किम् । किमिति विजयानन्द एतावदवस्थां प्राप्तः ॥ १३५ ॥ १३६) **णीसेस** — निःशेषनीतिशास्त्रार्थवस्तुविस्तारमतिरपि असहाय एको व्यपगतवाहनः पादचारी कथमत्रागतः ॥ १३६ ॥ १३६*१) **ण य** — [ न च भृत्याः नेह करी न च तुरगाः नैव पोट्टिसो मन्त्री । विजयानन्दस्य कथं कथं जाता ईदृशी अवस्था ] ॥ १३६*१ ॥ १३७) **भणियं** — भणितं कुमारिलेन नरपते विषमा जगति कार्यगतिः । मन्ये तथापि [21]केनापि कार्येण संप्राप्तः ॥ १३७ ॥ [ किं यथा । ] १३८) **परिवड्ढिय** — परिवर्धितप्रभुसंभावनानाम् एवंविधे महाकार्ये असमाप्तप्रेषणानाम् असिद्ध-

---

[1] P केणा॰, J केग, B किणा॰. [2] B णेवत्थो. [3] विंभिव. [4] B तं. [5] = वेत्रिकेण. [6] B जं सिट्ठं for संलत्तं. [7] P वित्थिय, J वित्थय, B वित्थर. [8] B वि. [9] B इत्थं. [10] This verse is found only in P, but not in JB; the actual readings of P are न य, नेह, न य and नेय in the first line and एरसा in the second. [11] [कुमारेण]. [12] B omits देव. [13] B कज्जागई. [14] B omits किं जहा. [15] = असमास. [16] = यस्मिन्कार्ये प्रेषिता, P पेसणाण. [17] P विय, JB चिह. [18] J सुहइ. [19] B॰ नैपथ्यो. [20] B यत्सृष्टं. [21] B केन.

ता जइ [1]कहावि एसो सिंहल-रायाहि[2] परिहवं पत्तो ।
ता एत्थ तुम्ह [3]दारे णूणं [4]णल्लियइ जीयंतो ॥ १३९
अह सो च्चिय[5] जोइक्खो[6] णिय-[7]कज्ज-गईए किं वियारेण ।
आणेह मा विलंबह दीसउ[8] ता से मुह-च्छाया ॥ १४०
तो तक्खण-रायाणत्त-दारवालाणुमग्ग-संलग्गो । ५
संचविओ कु[10]-घडंतुत्तमंग-कमलो णरिंदेण ॥ १४१
समइच्छिऊण सुंदरि[12] आणत्तं से सुहासणं पहुणा ।
उवविट्ठो[13] भट्ट-कुमारिलस्स पय-पेसियच्छि-जुओ ॥ १४२
अह तत्थ सुहासण-[14]कय-परिग्गहो [15]णिज्जणं विहेऊण ।
[16]खण-मेत्त-[17]समासत्थो [18]सच्छरियं पुच्छिओ पहुणा ॥ १४३ १०

---

कार्याणां पुरुषाणां मरणमेव सहइ शोभते । [9]एवं संभावनया प्रहितस्यासिद्धकार्यस्य पुंसः नगरागमनान्मृत्युरेव श्रेयान् । उक्तं च श्रीचक्रपाणिविजयमहाकाव्ये ।

यः स्वामिसंभावितकार्यसिद्धिरसिद्धकार्योऽपि विहस्य पृष्टः ।
अधोमुखोऽनुत्तरदानमूढः स चेज्जनो जीवति को विपन्नः ॥

इति ॥ १३८ ॥ **१३९) ता जइ**–तद्यदि कदाचित् सिंहलेशादेष परिभवं प्राप्तः १५ तदात्र युष्माकं द्वारं नूनं निश्चितं जीवन् नल्लियइ नोपसर्पति । [ 'उपसर्पेरल्लिअः' हैम० ८-४-१३९, इति ] सूत्रात् ॥ १३९ ॥ **१४०) अह सो**–अथ अथवा किं विचारेण विमर्शेन निजकार्यगतौ[20] निजस्वरूपज्ञापने[21] स चैव ज्योतिष्को दीपः । तमानयत[22] मा विलम्बध्वं दृश्यते तावत्तस्य मुखच्छाया वदनशोभा । कुमारिलवचनान्नरपतिना भावयित्वा निजहृदय आदेशो दत्तः । द्वारपाल [ तं ] शीघ्रं प्रवेशय [ इति ] २० ॥ १४० ॥ **१४१) तो तक्खण**–तत्क्षणतो राज्ञाज्ञप्तद्वारपालानुमार्गसंलग्नो नरेन्द्रेण सचविओ दृष्टः । किंविशिष्टः । कुघडंत इति कुः पृथ्वी तस्यां घटमानम् उत्तमाङ्गकमलं शिरःपद्मं यस्येति भूमिमिलन्मस्तक इत्यर्थः ॥ १४१ ॥ **१४२) समइच्छिऊण**–हे सुन्दरि सावित्रि प्रभुणा राज्ञा आलिंग्य से तस्य सुखासनं भद्रासनादि आज्ञप्तम् आदिष्टम् । भट्टकुमारिलस्य पदप्रेषिताक्षियुग उपविष्टः । राजसमक्षमपरत्र नम- २५ स्कृतावनधिकार इति । पददत्तदृष्टिः दृग्नमस्कृत इति भावः ॥ १४२ ॥ **१४३) अह तत्थ**–अथ तत्र सुखासनकृतपरिग्रहो निर्जनमेकान्तं विधाय कृत्वा क्षणमात्रसमासीनो विजयानन्दः प्रभुणा साश्चर्यं पृष्टः । अच्छरियं इति 'अतो रियाररिज्जरीयम्' [ हैम०

---

[1] B कज्जावि [ = कयाइ ]. [2] P puts No. 5 on हि. [3] B दारं. [4] = न लीयते । न श्लिष्यति. [5] = स एव. [6] = दीप. [7] P कज्जगईए किं, J कज्जगईहि कं, B कज्जागइइ किं. [8] B दीसइ. [9] = त्रिलोकितः. [10] P कुप्पडंतु°, J कुघडंतु°, B कुघडत्तु°. [11] = सस्पृह्य. [12] P सुंदरि. J सुदरि, B सुदूरि. [13] B उवइट्टो. [14] B किय. [15] = निर्जनं विधाय. [16] = क्षणमात्रसमाश्वस्तः, P खणमेत्त, J खणमित्त, B खणमत्त. [17] B समासीणो. [18] = सत् आश्चर्यं ( = साश्चर्यं ) [19] B ऋत्व. [20] B गतो. [21] B ज्ञापनो. [22] B तस्मानियतः.

हंहो तुह विजयाणंद एत्थ [१]एवंविहं समागमणं ।
णीसेस-जुत्ति-रहियं [२]अहियं [३]हिययं म्ह दूमेइ ॥ १४४

तो [४]अणुयंपाणुगयं वयणं णिय-सामिणो सुणेऊण ।
परिओस-वस-विसट्टंत-लोयणं तेण विण्णत्तं ॥ १४५

५ देव महंती [५]खु कहा एसा सुमणोरहा[६]णं संभूई ।
कोऊहलेण सीसइ अवहिय-हियया णिसामेह ॥१४६

मलयायलाहिवे वसिकयम्मि स[७]मियम्मि [८]पंडि-रायम्मि ।
पारद्धे रयणायर-पर-पारुत्तार-[१०]परियम्मे ॥ १४७

भणियं अमच्च-सिरि-पोट्टिसेण मा [११]ता करेह परियम्मं ।
१० सहस त्ति दंड-सज्झो ण होइ अम्हं सिलामेहो ॥ १४८

सामण्णो वि ण तीरइ दुग्गत्थो [१२]जोहिउं पर-भडेहिं ।
सो उ[१३]ण विहि[१४]-संपुण्णो सूरो चाई सुभिचो य ॥ १४९

---

८-२-६७ ] इति रियः ॥ १४३ ॥ १४४ ) **हंहो तुह** – हंहो विजयानन्द तव एवंविधमत्र समागमनम् । निःशेषयुक्तिरहितमधिकमस्माकं हृदयं दुनोति । 'दूङो दूमः' १५ [ हैम० ८-४-२३ ] इति दूमेइ ॥ १४४ ॥ १४५ ) **तो अणुयंपा** – ततोऽनुकम्पानुगतं करुणासारं वचनं निजस्वामिनो निशम्य परितोषवशविकसल्लोचनं तेन विज्ञप्तम् । 'विकसेः कोआसविसट्टौ' [ हैम० ८-४-१९५ ] इति विसट्टंत ॥ १४५ ॥ १४६ ) **देव महंती** – देव । खु निश्चये [ हैम० ८-२-१९८ ] । स्वमनोरथानां संभूतिरुत्पत्तिः एषा महती कथा कौतूहलेन कुतुकेन शिष्यते निगद्यते । अवहितहृदयाः सावधान- २० मानसाः निशाम्यत आकर्णयत ॥ १४६ ॥ तामेवाह[१५] । १४७ ) **मलया** – मलयाचलाधिपे वशीकृते स्वात्मसात्कृते निहते च पाण्ड्यराजनि पाण्ड्यदेशाधिपे प्रारब्धे रत्नाकरपरपारोत्तरणैकर्मणि ॥ १४७ ॥ किमित्याह । १४८ ) **भणियं** – भणितममात्यश्रीपोट्टिसेन । मा तावत्कुरुत परिकर्म प्रारम्भम् । यतः शिलामेघः सिंहलद्वीपाधिपोऽस्माकं सहसा दण्डसाध्यो न भवति ॥ १४८ ॥ १४९ ) **सामण्णो** – सामान्योऽपि एक- २५ ग्रामाधिपतिरपि दुर्गस्थः कृतदुर्गपरिग्रहः प्रतिभटैः शत्रुभिः योधितुं, न शक्यते । स पुनः शिलामेघस्त्रिभिः संपूर्णः । किं तत् त्रिकमित्याह । शूरः संग्रामधीरः, त्यागी दान-

---

[१] P एवंविह, JB एवंविहं. [२] B हियय अम्हाणं दूमेइ for अहियं etc. [३] P हिययम्ह. [४] = अनुकंपानुगत, B अणुकंपा°. [५] = निश्चये, J महाइक्खु. [६] J सुमणोहराण. [७] P समयंमि, J समियम्मि, B णिहियंमि. [८] PB पंडु°, J पंडि°. [९] B पारुत्तरणपरि°. [१०] = परिकर्म. [११] B मंतं for मा ता. [१२] J जोहिउ. [१३] J सोऊण. [१४] B सुप्पुण तिहिं for सो etc. [१५] B puts this phrase at the beginning of the commentary on the next verse.

जुत्तिण्णुओ[1] सहम्मो[2] अहिएहिँ[3] अलंघिओ महा-माणी ।
मंतुच्छाह-पहाणो दुक्खं[4] जोहिज्जइ परेहिं ॥ १५०
णय-विक्कमोवहोज्जा[5] सव्वाण[6] वि पत्थिवाण एस महीं[7] ।
ण उणेक्क-विक्कम-रसा हवंति सिरि-भाइणो[8] पुरिसा ॥ १५१
ता साम-णए संते [9]संते [10]पुरिसाण [11]भेय-विण्णाणे ।
दाणे [12]वि [13]संपडंते को दंडे आयरं कुणइ ॥ १५२
जं जह [14]कमेण भणियं [15]पुव्वायरिएहिँ [16]अत्थ-सत्थेहिं ।
तं तह [17]पडिवज्जंता सिरीए पुरिसा वरिज्जंति ॥ १५३
ता पेसिज्जउ दूओ [18]सामेक्कालाव-मुहल-पत्तट्ठो[19] ।
पर[20]-हियय-भाव-कुसलो दच्छो[21] कालण्णुओ[22] धीरो ॥ १५४

---

वीरः, सुभृत्ययुक्तः सत्यपरिवारश्चेति ॥ १४९ ॥ १५०) **जुत्तिण्णुओ**—युक्तिज्ञः उपायनिपुणः । सधर्मः धर्मो जयति नाधर्म इत्यायतिबलवान् । अहितैः शत्रुभिरलंघितः । महामानी परोत्सेकमसहिष्णुः । मन्त्रोत्साहप्रधानः शक्तित्रयपरिकलितः इत्यर्थः । ईदृशश्च परैर्वैरिभिः दुःखं कष्टेन योध्यते अभिभूयते ॥ १५० ॥ १५१) **णय**—सर्वेषामपि पार्थिवानां नरेन्द्राणाम् एषा मही नयविक्रमोपभोग्या । नयश्च न्यायो विक्रमः शौर्यता ताभ्यां भोक्तुं शक्या । न पुनरेकविक्रमरसाः पुरुषाः श्रीभाजनं भवन्ति ॥ १५१ ॥ १५२) **ता साम**—तस्मात् सामनये तथा भेदविज्ञाने विद्यमाने दाने च संपद्यमाने को नाम सुविचारः पुमान् दण्डे चतुर्थोपाये आदरं कुरुते ॥ १५२ ॥ १५३) **जं जह**—यद्यथा क्रमेण भणितं पूर्वाचार्यैरर्थशास्त्रे तत्तथा प्रतिपद्यमाना आद्रियमाणाः पुरुषाः श्रिया व्रियन्ते । यदुक्तं नीतिशास्त्रे ।

आदौ साम प्रयोक्तव्यं ततो दानं समाचरेत् ।
भेदं वा साधयेत्प्राज्ञः पश्चाद्दण्डमपि श्रयेत् ॥

अन्यच्च ।

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समं तुल्यपराक्रमैः ॥

इत्यादि ॥ १५३ ॥ १५४) **ता पेसिज्जउ**—तस्मात् प्रेष्यतां दूतः सामैकालापमुखरप्रासार्थः । परहृदयभावकुशलो मनोगतभावज्ञो दक्षः प्रबलो वैदग्ध्यवांश्च कालज्ञः प्रस्ता-

---

[1] = युक्तिज्ञो, P जुत्तिन्नुओ, J जुत्तिणुओ, B जुत्तिणउ. [2] = सधर्म्मः, J सहमो. [3] = अहितैः. [4] P दुक्ख, JB दुक्खं. [5] = नयविक्रमोपभोग्या, J णवियक्कमो°. [6] P सव्वाणं च, JB सव्वाण वि. [7] B विही. [8] P भाइणो, J भायणो, B भावणं [ = भायणं]. [9] B omits one संते. [10] B पुरुसाणं तह भेय°. [11] = भेदविज्ञाने. [12] B य. [13] = संपद्यमाने. [14] PB कामेण, J कमेण. [15] = पूर्वाचार्यैः. [16] = अर्थशास्त्रैः, P अत्थसत्थेहिं, J सत्थअत्थेहिं, B अत्थसत्थम्मि. [17] B पडियज्जंता. [18] = सामैकालापमुखरप्रासार्थः. [19] = कुशल. [20] P परहियय, J परिहि°, B परिहरियय. [21] B दक्खो. [22] = कालज्ञो.

